# TRIVANDRUM SANSKRIT SERIES
No. CXXIX.

Śrī Citrodayamañjarī
No. XVIII.




# हंससन्देशः ।

# HAMSASANDEŚA

EDITED BY
K. SAMBAŚIVA ŚASTRĪ,
*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

...ED UNDER THE AUTHORITY OF THE GOVERNMENT OF
...S HIGHNESS THE MAHARAJA OF TRAVANCORE.

...RUM: PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS. 1937.

TRIVANDRUM SANSKRIT SERIES.
No. CXXIX.
Śrī Citrodayamañjarī.
No. XVIII.

# THE

# HAMSASANDEŚA

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1937.

अनन्तशयनसंस्कृतग्रन्थावलिः।

ग्रन्थाङ्कः १२९.

श्रीचित्रोदयमञ्जरी।

ग्रन्थाङ्कः १८.

# हंससन्देशः

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण
के साम्बशिवशास्त्रिणा
संशोधितः।

स च
अनन्तशयने
महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितः।

कोलम्बाब्दाः ११०२. क्रैस्ताब्दाः १९२७.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# INTRODUCTION.

This obscure work is a third Hamsasandeśa which is different from the Hamsasandeśa of Śrīmad Vedānta Deśikācarya and the one already published by our department (No. 103 of the Trivandrum Sanskrit Series). It is evident that his course of literary composition takes a third direction as that of Murāri and to those who trace that course, something fresh and model becomes visible. Messages communicated to the beloved in miserable plights by the sweetheart under insufferable pangs of separation at some far-away place, for his own satisfaction and to save her from peril, are well-known in Sandeśas like Megha and others. Similar contexts have been magnificently handled by certain poets to express their feelings of devotion blended with Prema (divine love), that is far superior to Kāma (worldly affection). These originate in the hero and are destined to the heroine. But the one before us finds its source in the heroine and is destined to the hero. And so it is distinctively different from the others in point of its merits. The Sandeśa begins as follows:—

"काचित् कान्ता विरहशिखिना कामिनी कामतप्ता
निध्यायन्ती कमपि दयितं निर्दयं दूरसंस्थम् ।
भूयो भूयो रणरणकतः पुष्पवाटीं भ्रमन्ती
लीलावापीकमलपथिकं राजहंसं ददर्श ॥"

(Page. 1, Verse 1.)

The subject of this Sandeśa is the message communicated to Lord Śrī Kṛṣṇa sporting in the Bṛndāvana, by one damsel residing in Kāñcīpura who was enamoured of Him on beholding His triumphant procession on the occasion of a festival. It is praiseworthy that the heroine sends her Hamsa from Kāñci, through Cōḷa, Pāṇḍya, Keraḷa and then northwards to Kālindi and Bṛndāvana so as to perform a reverential circumambulation.

"प्राणाः प्राचां निगमवचसां प्राणनाथो रमाया-
स्त्राणायोच्चैस्तपसि चरतां वृष्णिवंशेऽवतीर्णः ।
यस्मिन् यस्मिन् स खलु रमते वल्लभो मे प्रदेशे
तं तं चित्ते वरगुण! मया कथ्यमानं निदध्याः ॥"

(P 2, V. 10.)

It is no matter of surprise that the heroine who as quoted above is fully absorbed in fancying the revelries and abodes of her beloved Śrī Kṛṣṇa, forgets to mention other important places of attraction. For she is unable to suffer the disappearance (of Kṛṣṇa) that impedes the progress of the abiding sentiment.

There is nothing improper in the heroine—just an ordinary girl—falling in love with the Supreme Being, Lord Śrī Kṛṣṇa, the Monarch of gods, as it was the case with the Gopikās. Further by dint of the power of realising the various imaginative fancies, she merrily floats in supreme bliss. And the Lord blesses and gratifies her, taking the forms that are in conformity with her varying fancies. It is said in the Bhāgavata:—

"अनुग्रहाय भक्तानां मानुषं देहमाश्रितः ।
भजते तादृशीं क्रीडां यां श्रुत्वा तत्परो भवेत् ॥"

In his Yādavābhyudaya, Śrīmad Vedānta Deśikācārya gives expression to the same truth in another form:—

"न खल्वमुष्य प्रमदामदान्ध्यं
न कुत्सितं तत्तदभीष्टदातुः ।
न धर्मसंस्थापनबाधगन्धः
शुद्धानुचिन्त्या हि शुभस्य लीला ॥
अनागमप्रत्ययसम्भवानां
गुरुत्यजां गोपकुमारिकाणां ।
अनन्यसङ्गात् स दयालुरासी-
दसङ्गघण्टापथसार्थवाही ॥"

(canto 8, verses 68, 69.)

Many great men known as Alvārs of Kāñci and numerous other Vaiṣṇavas, overwhelmed by divine love and addicted to the enjoyment of devotional emotions, dallied in revelries with the Lord, like the Gopikās, putting on the costumes of lovely damsels. I think the heroine might as well be one among them. In short this is the offering of the unobstructed and bountiful flow of the sentiment of devotion resplendent with the loveliness of love.

*The Author.* From the concluding verse it can be assumed that the author of this Sandeśakāvya was a poet named Pūrṇasarasvati.

"अग्रयं विष्णोः पदमनुपतन् पक्षपातेन हंसः
पूर्णज्योतिःपदयुगजुषः पूर्णसारस्वतस्य ।
क्रीडस्येष स्फुटमकलुषे मानसे सज्जनानां
मेघेनोच्चैर्निजरसभरं वर्षता धर्षितेऽपि ॥"

(P. 19, V. 102)

This Hamsasandeśa is a display of the poetic talents bursting forth from the imaginative splendour of one who gained the object of his life by writing the beautiful and illustrious commentary Vidyullata on the Meghasandeśa of the celebrated poet Śrī Kālidāsa. In the last line of the stanza quoted above, the poet acknowledges his great admiration for Meghasandeśa. But he seems to feel jealous in his composing the following verse which smacks of the flavour of—

"त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥"

(Uthara Megha Sloka 42.)

दिग्धं कान्त्या रहसि भवतो दिव्यमङ्गं लिखन्ती
सद्यः स्विद्यच्चलकरगतां तूलिकामुद्वहन्ती ।
मध्ये मध्ये वहति पिहितां भावनां मोहवेगै-
र्बाला नीलैरिव जलधरैश्चन्द्रिकामिन्दुरेखा ॥

(P. 16, V. 87.)

The complete history of the author is not yet available. Some say that he was a Keraḷa Brahmin of the family of Kāṭṭumādat (काट्टुमाटस्). Certain others are of opinion that he might as well be a Vaiṣṇava Brahmin of Kāñcipura. But the view that he was a Keraḷīya finds more support. He is considered to have been a native of the place called Triccambara and he rightly deserves the name Pūrṇasarasvati as he was blessed with poetic inspiration by the mercy of the God of Pūrṇatrayi, the great temple of Cochin. The poet reveals his feelings of patriotism in his requesting the Hamsa to go by Triccambara, ignoring Pūrṇatrayi, a place of prominence and acquaintance on the way. His great love as well as admiration for Trivandrum is clear from the following verses:—

"तेषां भूषामणिमनुपमं सेवितं योगिमुख्यैः
प्राप्यानन्तं पुरमहिशयं ज्योतिरानम्य भक्त्या ।
अन्विष्येस्तं जनमकरुणं मन्मनश्चोरमाराद्
देशे तस्मिन् स खलु रमते देवकीपुण्यराशिः ॥

तत्रत्यानां तरुणवयसां सुन्दरीणां विलासै-
र्माभूत् क्षोभस्तव मतिमतो बन्धुकार्योद्यतस्य ।
केशैः सान्द्रैरसितकुटिलैः केकिपिञ्छोपमेयैः
केषां न स्युर्धृतिविहतये केरलीनां मुखानि ॥

हर्म्ये हर्म्ये हरिमणिमये हेलया सञ्चरन्ती-
दृष्ट्वा तन्वीः प्रसरदरुणस्वच्छलावण्यदीप्ताः ।
मेघव्यूहस्फुरितवपुषां विद्युतां सत्वसिन्धो!
स्मारं स्मारं मनसि किमपि व्याकुलो मा च भूस्त्वम् ॥"
(P. 5, 6, V. 26—28.)

His feelings of self-respect find expression in the description of Kerala:—

वेलामेलावनसुरभिलां वीक्षमाणः पयोधे-
स्तालीकालीकृतपरिसरां ताड्यमानां तरङ्गैः ।
देशानाशाविततयशसो देवलोकोपमेयान्
केशाकेशिक्षतकलिबलान् केरलांस्तान् क्रमेथाः ॥
(P. 6, V. 32.)

I leave what remains to the men of literary taste, as apportioned to them and refrain from further remarks, lest the poetic eminence that is blossoming forth in every word of the poem should lead me away by its attractiveness.

*Date of the Poet.* He mentioned Divākarasūri, father of Śāradātanaya the author of Bhāvaprakāśa, in his commentary Vidyullata on Meghasandeśa,

यथा दिवाकरः —
"बुद्धिर्नीचपथेनास्मवृत्तिं वर्तयितुं रहः ।
यस्य जातु न जायेत सोऽयमुन्नतसंज्ञितः ॥"

But nowhere does he mention the great poet scholar and devotee Śrī Nārāyaṇa Bhaṭṭapāda. So his date must fall in between 1150—1590 A. D. Śrī Pūrṇasarasvati, the great poet and author of many works opens a new and beautiful path for others, in the line of Sandeśakāvyās, by dedicating his volition (मनोवृत्ति) the heroine to Lord Śrī Kṛṣṇa who dwells in the heart of the Bṛndāvana through the Hamsa of knowledge for which we are all deeply indebted.

Other works of the same author,

1. Kamalinīrājahamsa (Drama).
2. Vidyullatā (Commentary on Meghasandeśa, published).
3. Bhaktimandākinī (Commentary on the Viṣṇupādādikeśastava) unpublished.
4. Śivakeśapādādistavavyākhya.
5. Anargharāghavaṭippaṇam.
6. Mālatīmādhavavyākhya.

Below is given an appendix showing the various places mentioned in the Sandeśa, which may be of help to thos desirous of studying the work.

| Names | Page | Verse |
|---|---|---|
| Cōḷa | 3 | 11 |
| Kāveri | 3 | 11 |
| Śrīraṅgam | 3 | 14 |
| Pāṇḍya | 4 | 21 |
| Śrīnagari | 5 | 21 |
| Tāmraparṇi | 5 | 23 |
| Keraḷa | 5 | 25 |
| Anantaśayanam (Trivandrum) | 5 | 26 |
| Raktadrumam (Cemmaram) | 6 | 29 |
| Kālindi | 7 | 33 |
| Bṛndāvana | 8 | 38 |
| Ghoṣa | 8 | 40 |

I place the work before the public just pointing out certain facts that are worthy of attention.

Trivandrum,<br>9-8-1112.

K. SĀMBAŚIVA ŚĀSTRĪ.

---

॥ श्रीः ॥

# निवेदना ।

---

अयमपूर्वः कोऽपि तृतीयो हंससन्देशो यः श्रीमद्वेदान्तदेशिकाचार्यप्रणीताद् यश्चान्यस्मादस्मदधिकरणप्रसिद्धीकृताद् इतरः । तृतीय एव चास्य पन्था मुरारेरिव साहितीसंविधाने स्पष्टः, येन सञ्चरमाणानामभिनवं किमपि किमप्यनुकरणीयं पुरस्तात् स्फुरति । विरहवेदनासहनैः कमनैस्तत्तादृगवस्थापन्नां प्रेयसीमत्याहिताद् रक्षितुं विदेशस्थैरात्मनः समाधानाय क्रियमाणाः सन्देशा मेघादिषु प्रसिद्धाः । तमिमं सन्दर्भं सर्वेश्वरगतां कामाधिकप्रेमात्मिकां भक्तिं प्रसाधयितुमपि कतिपये कवयः सफलयन्तो दृष्टाः । सर्वोऽयं नायकभूयमेत्य नायिकायै क्रियमाण एव । प्रकृतस्तु नायिकाभूयमेत्य नायकायेति तत्रापि सामान्येतरा मान्यतास्य सिद्धा । तथा चोपक्रमः —

"काचित् कान्ता विरहशिखिना कामिनी कामतप्ता
निध्यायन्ती कमपि दयितं निर्दयं दूरसंस्थम् ।
भूयो भूयो रणरणकतः पुष्पवाटीं भ्रमन्ती
लीलावापीकमलपथिकं राजहंसं ददर्श ॥"

(पृ० १, श्लो० १.)

काञ्चीपुरवास्तव्यया कयाचन कान्तया महोत्सवाघोषे भगवतः श्रीकृष्णस्य यात्राविजयमवलोक्य परवशया बृन्दावनान्तविहारिणे तस्मै परस्मै भगवते हंसमुखेन प्रेष्यमाणः सन्देशोऽस्य काव्यस्य विषयः । काञ्च्याश्चोलान् पाण्ड्यान् केरलांस्तत उत्तराशामुखेन कालिन्दीं बृन्दावनं च सञ्चारयन्त्यसौ नायिका समुचितमेव प्रदक्षिणतो हंसं प्रेषयति ।

"प्राणाः प्राचां निगमवचसां प्राणनाथो रमायाः
त्राणायोच्चैस्तपसि चरतां वृष्णिवंशेऽवतीर्णः ।
यस्मिन् यस्मिन् स खलु रमते वल्लभो मे प्रदेशे
तं तं चित्ते वरगुण ! मया कथ्यमानं निदध्याः ॥"

(पृ० २, श्लो० १०.)

इति दिशा स्वप्राणवल्लभस्य श्रीकृष्णस्य रतिनिवासदेशानेव सङ्कल्पयन्ती नायिका मध्ये विपुलविभवानप्यन्यान् प्रदेशान् परिजहती नापराधाय। विचारान्तरेण तिरोधानं च विविक्ततरप्रक्ततरसं प्रतिबध्नन्न च खलु मर्षणीयम्।

कस्याश्चन नार्या नायिकायाः परमपुरुषे भगवति देवतासार्वभौमे रतिरसौ नानुचिता गोपिकानामिव। विशिष्य तत्तदात्मभावनाबलादतिशयित-परमानन्दसमान्दोलिता सरसा च। किञ्च भगवानपि तत्तद्भावनानुगुण्येन तं तं देहमवलम्ब्य रमयन्ननुगृह्णाति। तथाचोक्तं भागवते —

"अनुग्रहाय भक्तानां मानुषं देहमाश्रितः।
भजते तादृशीं क्रीडां यां श्रुत्वा तत्परो भवेत्॥"

इति। इदमेव च तत्त्वं रूपान्तरेण निगद्यते यादवाभ्युदये श्रीमद्वेदान्त-देशिकाचार्यैः —

"न खल्वमुष्य प्रमदामदान्ध्यं
न कुत्सितं तत्तदभीष्टदातुः।
न धर्मसंस्थापनबाधगन्धः
शुद्धानुचिन्त्या हि शुभस्य लीला॥
अनागमप्रत्ययसम्भवानां
गुरुत्यजां गोपकुमारिकाणाम्।
अनन्यसङ्गात् स दयालुरासी-
दसङ्गघण्टापथसार्थवाही॥"

(स० ८, श्लो० ६८, ६९.)

अल्वार्संज्ञाश्च बहवः पुमांसः परमप्रेमावेशविवशा भगवति भक्ति-रसास्वादलम्पटाः सुन्दरीभूमिकामवलम्ब्य साकं भगवता गोपसुन्दरीवद् रतिलीलाविलासानुपभुञ्जानाः काञ्च्यामन्यत्र वैष्णवेषु च पुरा प्रसिद्धाः। मन्ये तेषु वा स्यादियं नायिकान्यतमापि। सर्वथा भक्तेः शृङ्गारभङ्गीतरङ्गितायां अयं कोऽपि चर्वणापदवीं प्रापितोऽर्थः समर्प्यत इति तु तत्त्वम्।

कविः। अस्य सन्देशकाव्यस्य कर्ता पूर्णसरस्वतीनामा कोऽपि महाकवि-रिति शक्यमूहितुमुपसंहारपद्यादस्मात्।

"अग्र्यं विष्णोः पदमनुपतन् पक्षपातेन हंसः
पूर्णज्योतिःपदयुगजुषः पूर्णसारस्वतस्य।

क्रीडत्येव स्फुटमकलुषे मानसे सज्जनानां
मेघैर्नोच्चैर्निजरसभरं वर्षताधिष्ठितेऽपि ॥"
(पृ० १९, श्लो० १०२.)

महाकविश्रीकालिदासकृतस्य मेघसन्देशस्य विद्युल्लताख्यां कामपि सहृदयहृदयग्राहिणीं व्याख्यामारचय्य कृतार्थस्य तद्भावनाभावितवृत्तेरयमभ्युदितः कोऽपि वैखरीविलासो नाम हंससन्देशः। अस्मिन्नेव चोद्धृते पद्ये स्वस्य मेघसन्देशे बहुमतिमसाधारणां चतुर्थेन पादेन प्रकटयन्नपि कविरयं तत्राभ्यसूयावानिव 'त्वामालिख्ये'ति पद्यगन्धि पद्यग्रन्थिमेवमारचयति —

"दिग्धं कान्त्या रहसि भवतो दिव्यमङ्गं लिखन्ती
सद्यः स्विद्यच्चलकरगतां तूलिकामुद्वहन्ती।
मध्ये मध्ये वहति पिहितां भावनां मोहवेगै-
र्बाला नीलैरिव जलधरैश्चन्द्रिकामिन्दुरेखा ॥"
(पृ० १६, श्लो० ८७.)

अस्य कवेः परिपूर्णं जीवचरितमधगन्तुं न पार्यते। केचिदिमं केरलीयं काद्दुमाटसकुलजातं विप्रवरमाचक्षते। काञ्चीपुरदेशीय एव कश्चिदयं वैष्णवब्राह्मणश्च नासम्भवीति परे। तत्र केरलीय इति पक्ष एव ज्यायान् — गोश्रीपुरप्रधानक्षेत्राधिष्ठितपूर्णत्रयीशकरुणया लब्धसरस्वतीप्रसादोऽयं पूर्णसरस्वतीनामान्वर्थाभिधानः केरलेषु तृच्चम्बरदेशीयः स्यात् सम्भवेत्। प्रसिद्धतमं परिचितचरं च पूर्णत्रयीशमपि मध्येपथमन्वेष्टुमचोदयन्नयं हंसं तृच्चम्बरदेशं गमयंश्च तत्र स्वदेशाभिमानं बाढमाविष्करोतीव। अस्मदनन्तशयने च महत्यस्य प्रतिपत्तिरविमतिपत्तिरेवं वर्णनया प्रकाशते —

"तेषां भूषामणिमनुपमं सेवितं योगिमुख्यैः
प्राप्यानन्तं पुरमहिशयं ज्योतिरानम्य भक्त्या।
अन्विष्येस्तं जनमकरुणं मन्मनश्चोरमाराद्
देशे तस्मिन् स खलु रमते देवकीपुण्यराशिः ॥
तत्रत्यानां तरुणवयसां सुन्दरीणां विलासै-
र्मा भूत् क्षोभस्तव मतिमतो बन्धुकार्योद्यतस्य।
केशैः सान्द्रैरसितकुटिलैः केकिपिञ्छोपमेयैः
केषां न स्युर्धृतिविहतये केरलीनां मुखानि ॥

हर्म्ये हर्म्ये हरिमणिमये हेलया सञ्चरन्ती-
र्दृष्ट्वा तन्वीः प्रसरदरुणस्वच्छलावण्यदीप्ताः ।
मेघव्यूहस्फुरितवपुषां विद्युतां सत्त्वसिन्धो!
स्मारं स्मारं मनसि किमपि व्याकुलो मा च भूस्त्वम् ॥"
(पृ० ५, ६, श्लो० २६–२८.)

केरलानां वर्णनेऽस्वाहन्तयोल्लिखितिः यथा —

"वेलामेळावनसुरभिलां वीक्षमाणः पयोधे-
स्ताळीकाळीकृतपरिसरां ताड्यमानां तरङ्गैः ।
देशानाशावितितयशसो देवलोकोपमेयान्
केशाकेशिक्षतकलिबलान् केरलांस्तान् क्रमेथाः ॥"
(पृ० ६, श्लो० ३२.)

इति । एवमस्य साहितीसमुज्जृम्भणमनुपदमनुसन्धीयमानं भूयसाकर्षकं तत्तत्सहृदयानामभिष्यादिति विरम्यते ।

जीवितसमयः — भावप्रकाशकर्तुः शारदातनयस्य पितरं दिवाकरसूरीन्द्रं स्वकीये विद्युल्लताख्ये मेघव्याख्याने–यथा दिवाकरः —

"बुद्धिर्नीचपथेनात्मवृत्तिं वर्तयितुं रहः ।
यस्य जातु न जायेत सोऽयमुन्नतसंज्ञितः ॥"

इत्यनुस्मरतः क्वचिदपि महाकविं महापण्डितं भक्तशिरोमणिं च श्रीमन्नारायणभट्टपादमननुस्मरतश्च तयोरन्तराळवर्ती स्याज्जीवितसमयः। सर्वथा बहुप्रबन्धकर्तायं महाकविः श्रीपूर्णसरस्वतीसंज्ञः स्वकीयां मनोवृत्तिमेव नायिकां श्रीकृष्णे परमात्मनि वृन्दावनान्तसञ्चारिणि समर्पयन्ननेन विज्ञानहंसेन धन्यधन्योऽस्मानपि सुन्दरं पन्थानं सन्देशात्मानमुपदिशतीत्यत्र सर्वैराधमर्ण्यमनुभूयते ।

एतत्प्रणीतश्चान्याः कृतयः —

१. कमलिनीराजहंसं (नाटकं) सम्प्रत्यस्माभिर्मुद्रणायोपात्तम् ।
२. विद्युल्लता (मेघव्याख्या) मुद्रिता ।
३. भक्तिमन्दाकिनी (विष्णुपादादिकेशस्तवव्याख्या) अमुद्रिता ।
४. शिवकेशादिपादस्तवव्याख्या । तथा
५. अनर्घराघवटिप्पणम् । तथा
६. मालतीमाधवव्याख्या इत्यादयः । तथा

अतश्चोद्धृतानां देशादीनां कापि निर्देशनी सूची जिज्ञासमानाना-मुपकारायाधः प्रदर्श्यते —



एवं यावता सङ्गृह्य प्रकृतसन्देशीयं निरूपणं निवेद्य तमिमं महाजनसमक्षमवतारयन्नयमनुगृह्यै गृह्यै चाभ्यन्तरे सताम् ॥

अनन्तशयनम्,
४–९–१११२.

के. साम्बशिवशास्त्री.

॥ श्रीः ॥

# हंससन्देशः ।

---

काचित् कान्ता विरहशिखिना कामिनी कामतप्ता
निध्यायन्ती कमपि दयितं निर्दयं दूरसंस्थम् ।
भूयो भूयो रणरणकतः पुष्पवाटीं भ्रमन्ती
लीलावापीकमलपथिकं राजहंसं ददर्श ॥ १ ॥

तं पक्षीन्द्रं तरुणमधुरस्निग्धमुग्धाननाङ्घ्रिं
सम्भाव्यासौ सरसमधुरस्यन्दिना पङ्कजेन ।
प्रीतायास्मै प्रणयिसुहृदे स्वां दशां ख्यापयन्ती
वक्त्राम्भोजं सजलनयनम्लानमानम्य तस्थे ॥ २ ॥

काङ्क्षन्ती सा करुणहृदयं कृच्छ्रसंरुद्धबाष्पा
दूतीकर्तुं द्विजवरममुं दूरवृत्तेः प्रियस्य ।
ऊढोत्कम्पातरलितकुचैरूर्मिभिः श्वासवायो-
रूचे वाचं मधुरसमुचं मन्दमुन्मीलिताक्षी ॥ ३ ॥

कच्चिद् भ्रातः! कथय कुशलैरागमस्त्वं धरित्रीं
धन्या कच्चिज्जयति वरटा धर्मदाराः प्रिया ते ।
दूरं याते त्वयि सुमधुरं या तृषार्त्तापि वक्त्रे
बिम्बाताम्रे बिसकिसलयं बिभ्रती जोषमास्ते ॥ ४ ॥

G. P. T. 16. 500. 26-11-1111.          B

शुद्धः पक्षस्तव शुचितरं मानसं जन्मभूमि-
मन्दाकिन्याः कनकनलिनीकाननं राजधानी ।
पारम्पर्यादधिकृतिरहो पक्षिणामाधिराज्ये
वाचो रेखामति हि भवतो वैभवं वर्तते नः ॥ ५ ॥

युष्मद्वंश्यैरनुपमजवैरुह्यमाने विमाने
मानोन्नद्धैरखिलजगतां माननीयस्य धातुः ।
पङ्गुः शङ्के भवति ग(ह ? म)ने पङ्कजाक्षौपवाह्यो
गङ्गामौलेः किमुत (रज ? जर)सा गर्भिताङ्गः शताङ्गः ॥ ६ ॥

रूपं बिभ्रन्नट इव सखे ! रोचमानं त्वदीयं
मातुं धाता मदनदमनज्योतिरूर्ध्वं गतोऽभूत् ।
तस्मिन् कृत्ये न पुनरशकत् तत्र किं हन्त चित्रं
नासीद् गर्भे शुभचरित ! यद् धारितस्त्वज्जनन्या ॥ ७ ॥

स त्वं सख्यौ स्थिरयितुमसून् सत्वरं सत्त्वराशे !
दौत्ये निन्द्येऽप्युपनय मनो दूततां मे प्रपश्यन् ।
सन्तः प्राणैरपि विदधते सम्मदं संश्रितानां
कामान् कुर्युः कथमिव न ते कर्मणा केवलेन ॥ ८ ॥

पौनःपुन्याद् भुवनमखिलं भ्राम्यतः स्वैरवृत्तेः
शक्तस्योच्चैरपि समुदिते क्षीरनीरे विवेक्तुम् ।
मार्गं तावन्महित ! महतां नोत्सहे ते प्रवक्तुं
ज्ञातज्ञानं न खलु सुधियां तुष्टये पिष्टपेषः ॥ ९ ॥

प्राणाः प्राचां निगमवचसां प्राणनाथो रमाया-
स्त्राणायोच्चैस्तपसि चरतां वृष्णिवंशेऽवतीर्णः ।

यस्मिन् यस्मिन् स खलु रमते वल्लभो मे प्रदेशे
तं तं चित्ते वरगुण ! मया कथ्यमानं निदध्याः ॥ १० ॥

चोलान् देशानवनितिलकान् यांहि तावत् समृद्धान्
पुत्रस्नेहात् प्रचुरपयसा पोषितान् सह्यपुत्र्या ।
कल्हाराणां कलमसुहृदां कच्छभागेषु यस्या
गन्धैः सार्धं बिदधति दिशां गात्रवासं यशांसि ॥ ११ ॥

शान्तश्रान्तिः सपदि मृदुना तत्तटोद्यानभाजां
सेवन्तीनां परिमलमुषा सेवितो मारुतेन ।
चूतच्छाये क्षणमुपविशेर्दर्शनोत्कण्ठितानां
स्वानां यूथैरुपहृतबिसैः स्वागतेनाभियातः ॥ १२ ॥

तस्यां स्नातः शुचिभिरमृतैः सादरं तर्पयित्वा
कृत्वा तृप्तिं पितृपरिषदः कल्पसुस्थां कृतार्थः ।
कावेरीं तां कमलवदनां भुङ्क्ष्व कान्तामिवेष्टां
सल्लापैस्तैः सरसमृदुलैः सान्द्रतामादधानः ॥ १३ ॥

कल्पापायेऽप्यविगतलयं कल्पकं भुक्तिमुक्त्योः
श्रीरङ्गाख्यं पुरमथ विशेर्धाम भौमं त्रिधाम्नः ।
पौरस्त्रीणां सह रतिकलाभङ्गिरङ्गैरपाङ्गैः
स्निग्धा दृष्टिर्निपतति जने यत्र मुक्त्यङ्गनायाः ॥ १४ ॥

सौवर्णानां मरतकशिलाशालिनां तोरणानां
भासा या सा स्फुरति नगरी भानुमार्गं स्पृशन्त्या ।
पापारण्यं चिरपरिणतं दग्धुमासेदुषां स्वं
धूमोन्मिश्रद्दवहुतवहज्वालया लीलयेव ॥ १५ ॥

नाभीपङ्केरुहपरिमलो नागशय्यस्य विष्णोः
पूगश्रेणिस्फुटितकुहलीसौरभश्च प्रसर्पन् ।
पौराणां च प्रथमवयसां स्फारतारुण्यगन्धो
वारं वारं मदयति मनो वासयन् यत्र विश्वम् ॥ १६ ॥

यत्र स्वच्छे शयितमुरगे मण्डलीभूतभोगे
मुक्ताहारे मरतकमिव न्यस्तमुन्मुक्तदोषम् ।
दीपं दीपैरिव बहुविधैः स्वावतारैस्तमोघ्नं
धाम श्यामं प्रणम शिरसा धातुराद्यस्य धातृ ॥ १७ ॥

विष्णो रात्रौ विहृतिसमये तत्र सेवाचराणां
वारस्त्रीणां करकिसलयैर्मन्दमुद्धूयमाने ।
भास्वद्रत्नोपलपरिलसद्दण्डतुण्डोज्ज्वलानां
मा भून्मोहः स्वजन इति ते मण्डले चामराणाम् ॥ १८ ॥

वामाक्षीणां वहति महति स्वच्छलावण्यपूरे
संलक्ष्याणि स्मितविलसितान्याननानि प्रपश्यन् ।
माध्वीलुब्धः सरसिजवनीकौतुकादुत्पतिष्यन्
मा गा भ्रान्ति पदमवनतेनैव मौढ्यं गुणाय ॥ १९ ॥

तत्रान्विष्टो यदि खलु मम प्राणनाथो न दृष्ट-
स्तस्माद् देशात् प्रचल ककुभो वीजयन् पक्षवातैः ।
वामापादस्थितिसुकृतिनां वार्यमाणोऽपि सख्याद्
मञ्जीराणां मणिगणभृतां मञ्जुना शिञ्जितेन ॥ २० ॥

गत्वा पाण्ड्यानथ जनपदान् गर्वितान् सर्वभोगै-
र्लीलायोगानिह बहुविधानीक्षमाणः पुरारेः ।

मध्ये तेषां मलयपवनाधूतजैत्रध्वजायाः
प्रेयान् भूयाः प्रथितयशसः *श्रीनगर्यास्तरुण्याः ॥ २१ ॥

आविश्चक्रे निगमवचसामर्थमानन्दतीर्थे
या संग्रन्थ्य द्रमिडधरणीभाषया भूषयेव ।
तां भक्तानां भवपरिणतं तापमत्रोद्धरन्तीं
मूर्तिं मूर्ध्ना विनम शठकोपाभिधानां मुरारेः ॥ २२ ॥

तस्याः सख्या इव परिसरे ताम्रपर्णीं प्रपद्येः
शुक्त्युद्गीर्णैर्गुरुभिरमलैर्मौक्तिकैः स्थूलवृत्तैः ।
त्वद्बन्धूनां कमलगृहिणां तुङ्गवीचीविकीर्णै-
रण्डैर्लोलैरिव बहुतरैरङ्कितां सैकतेषु ॥ २३ ॥

स्वादोत्कर्षान्मधुरसतृषा सेवितं मक्षिकाभिः
स्वच्छं तस्याः प्रलघु सलिलं स्वैरमास्वाद्य तृप्तः ।
चञ्चत्पक्षो मलयपवनैश्चन्दनामोदगर्भै-
र्लक्ष्मीभाजः कथमपि सखे! लङ्घयेः पाण्ड्यदेशान् ॥

धर्मः साक्षात् कृतयुगसखो येषु सानन्दमास्ते
मालिन्याढ्यं कलिविलसितं मन्यमानस्तृणाय ।
केळीस्थानं कमलदुहितुः केरळांस्तानुपेयाः
शीतोत्सङ्गान्मरिचतिलकालिङ्गिताङ्गैर्लवङ्गैः ॥ २५ ॥

तेषां भूषामणिमनुपमं सेवितं योगिमुख्यैः
प्राप्यानन्तं पुरमहिशयं ज्योतिरानम्य भक्त्या ।
अन्विष्येस्तं जनमकरुणं मन्मनश्चोरमाराद्
देशे तस्मिन् स खलु रमते देवकीपुण्यराशिः ॥ २६ ॥

---

* श्रीनगरी=തിരുവനന്തപുരം (തിരുനഗരി).

तत्रत्यानां तरुणवयसां सुन्दरीणां विलासै-
मा भूत् क्षोभस्तव मतिमतो बन्धुकार्योद्यतस्य ।
केशैः सान्द्रैरसितकुटिलैः केकिपिञ्छोपमेयैः
केषां न स्युर्धृतिविहतये केरळीनां मुखानि ॥ २७ ॥

हर्म्ये हर्म्ये हरिमणिमये हेलया सञ्चरन्ती-
र्दृष्ट्वा तन्वीः प्रसरदरुणस्वच्छलावण्यदीप्ताः ।
मेघव्यूहस्फुरितवपुषां विद्युतां सत्त्वसिन्धो !
स्मारं स्मारं मनसि किमपि व्याकुलो मा च भूस्त्वम् ॥२८॥

तस्मिन् नो चेत् तरलहृदयस्तावके दृष्टिमार्गे
क्षेत्रं *रक्तद्रुममिति महत् केरळेष्वेव यायाः ।
तत्राप्येनं विचिनु शनकैस्तत्पराणां समाजे
तन्द्रालुत्वं न खलु घटते धर्मकार्योद्यतानाम् ॥ २९ ॥

तत्राप्याशा यदि विफलिता दैवदोषैर्मदीयै-
रुत्पत्योच्चैर्गगनसरणीमुत्तराशामुखः स्याः ।
आशाकालाननुकलमसूनिर्द(यं ? हन्) निर्दयो मे
कालक्षेपं न खलु (घट ? सह)ते कामबाणः कठोरः ॥ ३० ॥

ग्रामे ग्रामे क्षितिदिविषदां होमधूमप्रबन्धै-
र्जातं जातं जलधरधिया जाड्यमाधूय युक्त्या ।
पायं पायं पथि परिमलश्लाघिनीं पद्ममाध्वीं
मोदं मोदं मुहुरुपहतां पद्मिनीभिः प्रियाभिः ॥ ३१ ॥

वेलामेलावनसुरभितां वीक्षमाणः पयोधे-
स्ताळीकाळीकृतपरिसरां ताड्यमानां तरङ्गैः ।

---

* रक्तद्रुमं=ചെമ്മരം.

देशानाशाविततयशसो देवलोकोपमेयान्
केशाकेशिक्षतकलिबलान् केरळांस्तान् क्रमेथाः ॥ ३२ ॥

तीर्त्वा नानाजनपरिवृतान् नीवृतस्तीव्रवेग-
स्तीर्थे तीर्थे कृतविहरणः पद्मिनीः सेवमानः ।
निद्रां गच्छन् दिनपरिणतौ निर्भये क्वापि देशे
कन्यां भानोः श्रुतिमिव यतिः कल्पयन् याहि सीमाम् ॥

पूर्णश्चन्द्रः कमलमथवा पुण्डरीकं द्युनद्याः
स्रस्तं हस्तादुत सुरपतेश्चामरं वारवध्वाः ।
इत्थं व्योम्नः शिरसि तरसा धावमानं मदर्थे
वीक्षिष्यन्ते जनपदजनास्त्वामनल्पैर्विकल्पैः ॥ ३४ ॥

आदौ नादो मधुमदकलः क्रीडतां सारसानां
पद्मामोदी तदनु पवनः पावितस्तोयलेशैः ।
भानोः पुत्र्यास्तटमथ तटं स्फीतमालै(स्तमालै)-
र्मूर्त्तिः पश्चान्मरतकशिलामोहिनी ते मुदे स्यात् ॥ ३५ ॥

कालिन्दीं तां कलुषशमनीं कालियेन प्रमुक्तां
कान्तः कान्तामिव गतरुजं गाढमालिङ्ग्य तुष्येः ।
नीलं यस्याः स्फुरति सलिलं मालया तावकानां
व्यूढं वक्षस्तटमिव हरेर्लम्बमुक्ताकलापम् ॥ ३६ ॥

तस्याः सिन्धोस्तपनदुहितुः सिन्धुराजप्रियायाः
शश्वत् पक्षक्षरितमरुतश्चामराळीर्मराळीः ।
दृष्ट्वा हृष्टास्तव खगपते ! भाविनी तृप्तिरग्र्या
सत्पक्षाणां द्रवति हि मनः सङ्गमे बान्धवानाम् ॥ ३७ ॥

जग्ध्वा गृध्नुः श्रमपरिमृजः स्निग्धमुग्धा मृणाळीः
सान्द्राश्चान्द्रीरिव करलताः स्फारतर्षश्चकोरः ।
पद्मे पद्मे परिचिततरसस्तीरभागेन तस्या
वृन्दैः स्वानां समुपचरितो याहि वृन्दावनान्तम् ॥ ३८ ॥

बाल्ये भाते बकविजयितां बद्धदाम्ना विलग्ने
भानोर्मार्गे विकटविटपावर्जुनौ वीक्षमाणः (?) ।
किञ्चिद् गत्वा पिहितगगनं तत्र तत्रानुपश्येः
कीर्त्तिस्तम्भं यदुकुलपतेः कीकसं कण्टकानाम् ॥ ३९ ॥

दीनैः प्राप्तैर्विकसितमुखैर्निष्पतद्भिः कृतार्थै-
रर्थिव्रातैः सह घनभरैर्लुठ्यमानापवर्गम् ।
राजन्वन्तं महिततपसा नन्दगोपेन पश्ये-
र्घोषं घोषैर्दिशि दिशि गवां घोषितं वत्सकानाम् ॥ ४० ॥

देवानां किं भवनमवनौ दैत्यभीत्या निलीनं
लक्ष्म्याः किं वा निखिलभुवनभ्रान्तिविश्रान्तिधाम ।
कोशागारं किमिदमथवा शेवधीनामिति द्राक्
तस्मिन् दृष्टे तव बहुमुखी भाविनी तात ! चिन्ता ॥ ४१ ॥

गायन्तीनां कलिमलमुषं बाललीलां मुरारे-
र्गीतं नन्दन् गलितमनसां गद्गदं गोपिकानाम् ।
कान्तस्नेहादुदधिसुतया गर्भदास्येव जुष्टाद्
घोषस्थानात् प्रचल परतः कोशमात्रं व्यतीतः ॥ ४२ ॥

वामं चक्षुः परिचलति मे स्पन्दते चोरुदण्डः
क्षामं चाङ्गं कवचितमिदं कण्टकैः कामतप्तम् ।

यस्मादुच्चैः स्फुरति च कुचद्वन्द्वमालिङ्गनोत्कं
द्रष्टास्येनं खगकुलपते ! तत्र मा संशयो भूत् ॥ ४३ ॥

छत्राम्भोजध्वजमकरिकाचक्रशङ्खाङ्कुशाङ्काः
पुष्पैरार्द्रैरमलमनसामर्घ्यमासूत्रयन्तः ।
पादन्यासाः पथि विचरतः प्रेयसो मे पवित्राः
प्राप्स्यन्त्यक्ष्णोस्तव विषयतां प्राश्रितस्यैव सन्तः ॥ ४४ ॥

शाखाचक्रे कुसुमकलिकाकङ्कटे सङ्कटानां
माध्वीमाद्यन्मधुपमहिलामण्डलीमण्डितानाम् ।
सञ्छन्नानामिव रविभयाच्चित्रमाञ्जिष्ठवस्त्रैः
पश्येः षण्डं नवघनघटापक्ष्मलं पादपानाम् ॥ ४५ ॥

कुञ्जे कुञ्जे कुसुमिततले कान्तमन्विष्य यत्नाद्
भ्राम्यन्तीनां रणितरशनादाममित्रैः कलत्रैः ।
गोपस्त्रीणां गतिमनुसरन् विक्रमैः स्वैरुदारै-
र्मध्ये तेषां प्रविश सुकृतिन् ! मुक्तिमार्गं वशीव ॥ ४६ ॥

फुल्लन्मल्लीपरिमलसुहृत् केतकीगन्ध(बन्धु)-
र्मन्दः कुन्दस्तबकमदिराबिन्दुसान्द्रानुलिप्तः ।
(वातः) सप्तच्छदनरजसाक्षिप्तलोध्रप्रसून-
स्तस्मिन् देशे बकुलसुरभिः साधु सेविष्यते त्वाम् ॥ ४७ ॥

स्फारैर्दूरैः पवनरभसादुत्पतद्भिः परागै-
राविष्कुर्वन्नरुणकिरणैरास्थितामभ्रवीथीम् ।
अंशोरंशूनिव परिमृजन्नंशुकैः किंशुकाभै-
रग्रे ते स्यादमृतमदिरासोदरः पादपेन्द्रः ॥ ४८ ॥

मूले जाम्बूनदवपुरसौ पद्मरागः प्रकाण्डे
शाखाचक्रे मरतकमयो वैद्रुमः पल्लवे च ।
मुक्तारूपः कुसुमनिकरे लक्ष्यते मूर्तिबन्धः
कान्तिस्यन्दः स्थित इव पृथक् कल्पकानोकहानाम् ॥४९॥

इद्धामोदां कुसुमकलिकामिन्दुरेखाभिवेशो
धत्ते यस्य प्रसरदमृतस्यन्दिनीं वृष्णिचन्द्रः ।
रागात् तस्मिन् सपदि पतिता राजनि स्थावराणां
नालं दृष्टिस्तव विचलितुं नन्दसूनौ ममेव ॥ ५० ॥

तस्योदारां शशिमणिमयीं वेदिकामावसन्तं
कम्रं पश्येः कमपि सुभगं कल्पकं कल्पकस्य ।
लीलाहासैः सुरभिकुसुमैः पाणिपादैः प्रवालैः
वंशीनादैरपि मधुरसैर्मोहयन्तं त्रिलोकीम् ॥ ५१ ॥

पद्मद्वन्द्वं हिमकरकलाः पञ्चबाणस्य तूणी
नीलस्तम्भौ जलधिपुलिनं तुच्छमावर्तमुद्राम् ।
भृङ्गश्रेणीं मरतकशिलामण्डलं रत्नदण्डौ
भ्रातः! पश्येर्नवकिसलये कम्बुमम्भोरुहं च ॥ ५२ ॥

दारस्नेहादमृतमहसा शर्वरीं धार्यमाणां
ताराचक्रैरिव समुदितैरीर्ष्यया पीड्यमानाम् ।
वक्त्रे शौरेरलक(तिल ? लति)कां मालतीशेखराङ्कां
कल्यः पश्यन् फलमनुभवेः कर्मणां निर्मलानाम् ॥ ५३ ॥

भक्त्या पश्येर्भवभयरिपोः फालपद्मं विशालं
रोचिष्मन्तं रुचिररुचिना रोचनाचित्रकेण ।

बन्धुं लाक्षारसपरिचिता पादपद्मेन रोषात्
तारादारैः प्रणयसमरे ताडितस्याष्टमीन्दोः ॥ ५४ ॥

घोणादण्डं खगकुलपते! घोषनाथस्य पश्येः
संरक्ताभ्यां सुभगमभितः पीडितं लोचनाभ्याम् ।
ल(क्ष्मी ? क्षी)भूतं कुसुमधनुषा कुर्व(तां ? ता) शस्त्रशिक्षां
प्रो(तं) पुष्पं तिलभ(व)मिव प्रौढकुन्तद्वयेन ॥ ५५ ॥

माणिक्यांशुज्वलितमकरीकुण्डलाश्लिष्टगण्डौ
कर्णौ शौरेः कलय सुकृतिन्! श्लिष्टकल्हारनालौ ।
घर्मस्पर्शं मृदुनि वदने कर्कशार्कांशुजन्यं
बालाशोकद्रुमकिसलयैर्वारयन्ताविवोच्चैः ॥ ५६ ॥

उर्वीलक्ष्म्योर्दशनकदनैः क्लिष्टमोष्ठप्रवालं
दन्तश्रेणीं निजरुचिसुधावृष्टिभिस्तर्पयन्तीम् ।
स्तोकालक्ष्यां स्मितविकसिते पश्य वक्त्रे मुरारे-
रन्तर्लग्नाममृतकणिकापङ्क्तिमब्जद्विषीव ॥ ५७ ॥

कण्ठे शौरेस्त्रिवलिवलिते कम्बुकम्रे प्रलम्बे
प्रालम्बैस्तैर्विलित(?) + + + + + + + + + + + ।
शारस्निग्धैरिव शबलितं सस्पृहं (को ? लो)किनीना-
माविःस्नेहैरनिशमटवीदेवतानां कटाक्षैः ॥ ५८ ॥

तारं हारं हृदयतटके शार्ङ्गिणः स्थूलमुक्तं
दत्तोत्कर्षं तरुणतुलसीमालया नीलभासा ।
वीचीरेखासममिव जले फेनराशिं पयोधे-
र्मन्ये साधोर्मनसि भविता पश्यतस्ते न तृप्तिः ॥ ५९ ॥

